# श्रीपञ्चमुखिहनुमत्पञ्चरत्नम्

श्रीरामपादसरसीरुहभृङ्गराज-
संसारवार्धिपतितोद्धरणावतार ।
दोःसाध्यराज्यधनयोषिददभ्रबुद्धे
पञ्चाननेश मम देहि करावलम्बम् ॥ १॥

आप्रातरात्रिशकुनाथनिकेतनालि
सञ्चारकृत्य पटुपादयुगस्य नित्यम् ।
मानाथसेविजनसङ्गमनिष्कृतं नः
पञ्चाननेश मम देहि करावलम्बम् ॥ २॥

षड्वर्गवैरिसुखकृद्भवदुर्गुहाया-
मज्ञानगाढतिमिरातिभयप्रदायाम् ।
कर्मानिलेन विनिवेशितदेहधर्तुः
पञ्चाननेश मम देहि करावलम्बम् ॥ ३॥

सच्छास्त्रवार्धिपरिमज्जनशुद्धचित्ता-
स्त्वत्पादपद्मपरिचिन्तनमोदसान्द्राः ।
पश्यन्ति नो विषयदूषितमानसं मां
पञ्चाननेश मम देहि करावलम्बम् ॥ ४॥

पञ्चेन्द्रियार्जितमहाखिलपापकर्मा
शक्तो न भोक्तुमिव दीनजनो दयालो ।
अत्यन्तदुष्टमनसो दृढनष्टदृष्टेः
पञ्चाननेश मम देहि करावलम्बम् ॥ ५॥

इत्थं शुभं भजकवेङ्कटपण्डितेन

पञ्चाननस्य रचितं खलु पञ्चरत्नम् ।
यः पापठीति सततं परिशुद्धभक्त्या
सन्तुष्टिमेति भगवानखिलेष्टदायी ॥ ६॥

।। इति श्रीवेङ्कटार्यकृतं श्रीपञ्चमुखिहनुमत्पञ्चरत्नं सम्पूर्णम् ।।